॥ आद्यंत श्लोकाणि ॥

श्री गीताभाष्यम्

आदि

देवंनारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि लेशतः ॥ १॥

अंत्य

पूर्णादोषमहाविष्णोर्गीतामाश्रित्य लेशतः ।
निरूपणं कृतं तेन प्रियतां मे सदा विभुः ॥ १॥

॥ श्री ब्रह्मसूत्रभाष्यम् ॥

आदि

नारायणं सर्वगुणैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्व सूत्रार्थमुच्यते ॥ १॥

अंत्य

ज्ञानानंदादिभिस्सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोस्तु गुरवे नित्यं सर्वथातिप्रियाय मे ॥ १॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम् ।
बट्तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।
वायोरामवचनोयं प्रथमकं पृक्षो द्वितीयं वपुः ।
मध्वोयत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेनहि ॥ २॥

नित्यानंदो हरिर्पूर्णो नित्यदा प्रियतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥ ३॥

॥ श्रीमदणुभाष्यम् ॥

आदि

विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानंदोऽतरः खवत् ॥ १॥

अंत्य

नमो नमोऽशेषदोषदूर पूर्णगुणात्मने ।
विरिञ्चि शर्वपूर्वेड्यवंद्याय श्रीवराय ते ॥ १॥

॥ श्रीमदनुव्याख्यानम् ॥

आदि
नारायणं निखिलपूर्णगुणैकदेहं ।
निर्दोषमाप्यतममप्यखिलैस्सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि ।
वंद्यं सदा प्रियतमं मम सन्नमामि ॥ १॥

तमेव शास्त्रप्रभवं प्रणम्य जगद्गुरूणां गुरुमञ्जसैव ।
विशेषतोमे परमाख्यविद्या व्याख्यां करोम्यन्वपि चाहमेव ॥ २॥

अंत्य
निःशेषदोषरहित कल्याणाखिलसद्गुण ।
भूतिस्वयंभुशर्वादिवंद्यं त्वां नौमि मे प्रियं ॥ १॥

॥ श्रीप्रमाणलक्षणम् ॥

आदि
अशेषगुरुमीशेशं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥ १॥

अंत्य
अशेषमानमेयैक साक्षिणेऽक्षयमूर्तये ।
अजेशपुरुहूतेड्य नमो नारायणाय ते ॥ १॥

॥ श्रीकथालक्षणम् ॥

आदि
नृसिंहमाखिलाज्ञानतिमिराशिशिरद्युतिं ।
सम्प्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जस ॥ १॥

अंत्य
सदोदितामितज्ञानपूरवारितहृत्तमाः ।
नरसिंहः प्रियतमः प्रियतां पुरुषोत्तमः ॥ १॥

॥ श्रीउपाधिखण्डनम् ॥

आदि
नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रियतां कमलालयः ॥ १॥

अंत्य
मायावादतमोव्याप्तमिति तत्त्वदृषा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपदेस्सदा ॥ १॥

नमोऽमंदनिजानंदसुंदरसांद्रमूर्तये ।
इंदिरापतये नित्यानंदभोजनदायिने ॥ २॥

॥ श्रीमायावादखण्डनम् ॥

आदि
नरसिंहोऽखिलाज्ञानमतध्वांतदिवाकरः ।
जयत्यमितसज्ज्ञान सुखशक्तिपयोनिधिः ॥ १॥

अंत्य
नास्तिनारायण समं न भूतो न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थांसाधयाम्यहम् ॥ १॥

॥ श्रीमिथ्यात्वानुमानधिखण्डनम् ॥

आदि
विमतं मिथ्या दृश्यत्वाद्यदित्थं तत्तथा यथा सम्प्रतिपन्नम् ।
इत्युक्ते जगतोऽभावादाश्रयासिद्धः पक्षः ॥ १॥

अंत्य
यो दृश्यते सदानंदनित्यव्यक्तचिदात्मना ।
निर्दोषाखिलकल्याणगुणं वन्दे रमापतिम् ॥ १॥

॥ श्रीतत्त्वसङ्ख्यानम् ॥

आदि
स्वतंत्रमस्वतंत्रं च द्विविधं तत्त्वमिष्यते ।
स्वतंत्रोभगवान्विष्णुः भावाभावौद्विधेतरत् ॥ १॥

अंत्य

सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बंधो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।
विष्णुनास्य समस्तस्य समासव्यासयोगतः ॥ १॥

॥ श्रीतत्त्वविवेकः ॥

आदि
स्वतंत्रं परतंत्रं च प्रमेयं द्विविधं मतम् ।
स्वतंत्रोभगवान्विष्णुः निर्दोषाखिलसद्गुणः ॥ १॥

अंत्य
य येतत्परतन्त्रं तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ १॥

॥ श्रीतत्त्वोद्योतम् ॥

आदि
सर्वत्राखिल सच्छक्तिः स्वतंत्रोऽशेषदर्शनः ।
नित्याताद‍ृशचिच्छेत्ययंतेष्टो नो रमापतिः ॥ १॥

अंत्य
सत्यचिचेत्यपतये मुक्तामुक्तोत्तमाय ते ।
नमोनारायणायार्यवृंदवंदितपदद्वय ॥ १॥

जयत्यमितपौरुषः स्वजनतेष्टचिंतामणिः ।
अजेशमुखवंदितो गुणगणार्णवः श्रीपतिः ॥ २॥

सर्वज्ञासन्मुनींद्रोच्चसन्मनः पङ्कजाश्रयः ।
अजितो जयति श्रीशो रमाबाहुलताश्रयः ॥ ३॥

॥ श्रीकर्मनिर्णयः ॥

आदि
य ईज्यते विधीशानशक्रपूर्वैर्मुखैः सदा ।
रमाप्रणयिने तस्मै सर्वयज्ञाभुजे नमः ॥ १॥

अंत्य
नमोनारायणायाजभव शक्रोष्णरुङ्मुखैः ।

सदा वंदितपादाय श्रीपाय प्रेयसेऽधिकम् ॥ १॥

॥ श्रीविष्णुतत्त्वविनिर्णयः ॥

आदि
सदागमैक विज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥ १॥

विशेषणानि यानिह कथितानि सदुक्तिभिः ।
साधयिष्यामि तान्येव क्रमात् सज्जन संविदे ॥ २॥

अंत्य
स्वतंत्रायाखिलेशाय निर्दोषगुणरूपिणे ।
प्रेयसे मे सुपूर्णाय नमो नारायणाय ते ॥ १॥

॥ श्रीऋग्भाष्यम् ॥

आदि
नारायणं निखिलपूर्णगुणार्णमुच्च ।
सूर्यामितद्युतिमशेषनिरस्तदोषम् ।
सर्वेश्वरं गुरुमजेशनुतं प्रणम्य ।
वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ॥ १॥

अंत्य
उपपृत्तः क्षत्रियैस्स आवेशेन जनार्दनः ।
हन्ति शत्रूंश्च तैर्देवो भये च स्वाश्रयं ददौ ॥ १॥

वर्ताऽभिगंता तरुता जेता चास्य न हि क्वचित् ।
युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि ॥ २॥

॥ श्रीऐतरेयभाष्यम् ॥

आदि
नारायणं निखिलपूर्णगुणैकदेहम् ।
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचिद्परमेश्वरस्य ।
साक्षादधीश्वरमियां शरणं रमेशम् ॥ १॥

महाभूतिश्श्रुतिस्सैशां महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञाः शाश्वतः प्रभुः ॥ २॥

अंत्य
पूर्णागण्यगुणोदारधाम्ने नित्याय वेदसे ।
अमंदानंदसांद्राय प्रेयसे विष्णवे नमः ॥ १॥

॥ श्रीतैत्तिरीयभाष्यम् ॥

आदि
सत्यं ज्ञानमनंतमानंदं ब्रह्म सर्वशक्त्येकं ।
सर्वैदेवैरीड्यं विष्ण्वाख्यं सर्वदैमि सुप्रेष्ठम् ॥ १॥

अंत्य
पूर्णगण्यगुणोदारधाम्ने नित्याय वेदसे ।
अमंदानंदसांद्राय प्रेयसे विष्णवे नमः ॥ १॥

॥ श्रीबृहदारण्यकभाष्यम् ॥

आदि
प्राणादेरीशितारं परमुखनिधिं सर्वदोषव्यपेतम् ।
सर्वांतस्थं सुपूर्णं प्रकृति पतिमजं सर्वबाह्यं सुनित्यम् ।
सर्वज्ञं सर्वशक्तिं सुरमुनिमनुजाद्यैस्सदा सेव्यमानम् ।
विष्णुं वन्दे सदाहं सकलजगदनाद्यंतमानंददं तम् ॥ १॥

अंत्य
पूर्णगण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमंदानंदसांद्राय प्रेयसे विष्णवे नमः ॥ १॥

॥ श्रीईशावास्यभाष्यम् ॥

आदि
नित्यानित्य जगद्धात्रे नित्याय ज्ञानमूर्तये ।
पूर्णनंदाय हरये सर्वयज्ञभुजे नमः ॥ १॥

यस्माद्ब्रह्मेन्द्ररुद्रदेवतानां श्रियोपि च ।
ज्ञानस्फूर्तिस्सदा तस्मै हरये गुरवे नमः ॥ २॥

अंत्य
पूर्णशक्तिचिदानंदश्रीतेजः स्पष्टमूर्तये ।
ममाभ्यधिक मित्राय नमो नारायणाय ते ॥ १॥

॥ श्रीकठकभाष्यम् ॥

आदि
नमो भगवते तस्मै सर्वतः परमाय ते ।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः ॥ १॥

अंत्य
नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।
यस्याहमाप्त आप्तेभ्यः यो मे आप्ततमस्सदा ॥ १॥

॥ श्रीछान्दोग्यभाष्यम् ॥

आदि
अत्युद्रिक्त विदोष सत्सुख महाज्ञानैकतान्प्रभा ।
सर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिम् ॥ १॥

सृष्टिस्थाननिरोधनित्यनियति ज्ञानप्रकाशावृत्ति ।
ध्वांतामोक्षविमोक्षदं हरिमजं नित्यं सदोपास्महे ।
हयग्रीवमुखोद्गीर्णगीर्भिर्देवी रमापतिम् ।
अस्तुवद्विस्तृतगुणं भोगिप्रस्तरशायिनम् ॥ २॥

अंत्य
नित्यानंदो हरिःपूर्णो नित्यदा प्रियतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥ १॥

॥ श्रीआथर्वणभाष्यम् ॥

आदि
आनंदमजरं नित्यमजमक्षयमच्युतम् ।
अनंतशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ॥ १॥

मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि ।
मित्रश्च वरुणस्चाथो प्रहेतिर्हेतिरेव च ।
ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः ।

सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोग्रजः ॥ २॥

अंत्य
प्रियतां भगवन्मह्यं प्रेष्ठप्रेष्ठतमस्सदा ।
मम नित्यं नमाम्येनं परमोदारसद्गुणम् ॥ १॥

॥ श्रीमाण्डूक्यभाष्यम् ॥

आदि
पूर्णनंदज्ञानशक्ति स्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वंदे विष्णुं परं पदम् ॥ १॥

अंत्य
एकोपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।
यस्तं वंदे चिदानंदं विष्णुं विश्वादिरूपिणम् ॥ १॥

॥ श्रीषट्प्रश्नभाष्यम् ॥

आदि
नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।
अमंदानंदसांद्राय वासुदेवाय वेदसे ॥ १॥

अंत्य
नमो नमोस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानंदसंदोहसांद्रानंद वपुष्मते ॥ १॥

॥ श्रीतळवाकारोपनिषद्भाष्यम् ॥

आदि
अनंत गुणपूर्णत्वादगम्याय सुरैरपि ।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते ॥ १॥

अंत्य
यश्चिदानंद सच्छक्ति सम्पूर्णो भगवान्परः ।
नमोस्तु विष्णवे तस्मै प्रेष्ठाय प्रेयसां च मे ॥ १॥

॥ श्रीगीतातात्पर्यम् ॥

आदि
समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।
नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ॥ १॥

अंत्य
नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम ।
समस्तगुणसम्पूर्ण निर्दोषानंद दायिने ॥ १॥

निःशेषदोषरहित कल्याणाशेषलसद्गुण ।
भूतिस्वयंभूशर्वादिवंद्यं त्वां नौमि मे प्रियम् ॥ २॥

नमोजभवभूर्यक्षपुरः सरसुराश्रय ।
नारायणारणं मह्यं रमापते प्रेयसां प्रिय ॥ ३॥

॥ श्रीन्यायविवरणम् ॥

आदि
चेतनाचेतनजगन्नियंत्रेऽशेषसंविदे ।
नमोनारायणयाजशर्वशक्रादिवंदितम् ॥ १॥

अंत्य
चेतनाचेतनास्यास्य समस्तस्य यदिच्छया ।
स मम सुकृतेनैव प्रियतां पुरुषोत्तमः ॥ १॥

॥ श्रीनरसिंहनखस्तुतिः ॥

आदि
पान्त्वस्मान् पुरुहूतवैरि बलवन्मातङ्ग माद्यद्धटा ।
कुंभोच्चाद्रि विपाटनाधिकपटु प्रत्येक वज्रायिताः ।
श्रीमत्कंठीरवास्य प्रतत सुनखरा दारितारातिदूर ।
प्रद्ध्वस्तध्वांत शांत प्रवितत मनसा भावितानाकिवृंदैः ॥ १॥

अंत्य
लक्ष्मीकांत समंततोऽपिकलयन् नैवेशितुस्ते समम् ।
पश्याम्युत्तम वस्तु दूरतरतोपास्तं रसोयोऽष्टमः ।
यद्रोशोत्कर दक्ष नेत्र कुटिलः प्रांतोत्थिताग्नि स्फुरत् ।
खद्योतोपम विस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः ॥ २॥

॥ श्रीयमकभारतम् ॥

आदि
ध्यायेत परमानंदं यन्मातापतिमयदपरमानंदम् ।
उज्झितपरमानंदं पत्याद्याद्याश्रमैः सदैव परमानंदम् ॥ १॥

अंत्य
इति नारायणनामा सुखतीर्थसुपूजितस्सुरायणनामा ।
पूर्णगुणैरधिकज्ञाणेच्छाभक्तिभिस्स्वधिक पूर्णः ॥ १॥

॥ श्रीद्वादशस्तोत्रम् ॥

आदि
वन्दे वन्द्यं सदानंदं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादि वरदेश वरप्रदम् ॥ १॥

अंत्य
आनंदचंद्रिकास्यंदक वंदे आनंदतीर्थपरानंद वरद ॥ १॥

॥ श्रीकृष्णामृतमहार्णवम् ॥

आदि
अर्चितः संस्मृतो ध्यातः कीर्तितः कथितः शृतः ।
यो ददात्यमृतत्त्वं हि स मां रक्षतु केशवः ॥ १॥

अंत्य
श्रीमदानंदतीर्थाख्य सहस्रकिरणोत्थिता ।
गोततिः सततं सेव्या गीर्वाणैः सिद्धिदा भवेत् ॥ १॥

॥ श्रीतंत्रसारसंग्रहः ॥

आदि
जयत्यब्जभवेशेंद्रवंदितः कमलापतिः ।
अनंत विभवानंद दशश्तिज्ञानादिसद्गुणः ॥ १॥

विधिं विधाय सर्गादौ तेन पृष्टोऽब्जलोचनः ।
आह देवो रमोत्सङ्गविलसत्पादपल्लवः ॥ २॥

यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः ।
प्रियतां प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥ ३॥

अंत्य
अशेषदोषोज्झितपूर्णसद्गुणं सदाविशेषापगतोरुरूपम् ।
नमामि नारायणमप्रतीपं सदा प्रियेभ्यः परमादरेण ॥ १॥

॥ श्रीसदाचारस्मृतिः ॥

आदि
यस्मिन्सर्वाणिकर्माणि संन्यस्याध्यात्म चेतसा ।
निराशी निर्ममो याति परं जयति सोऽच्युत ॥ १॥

अंत्य
अशेषकल्याण गुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रियतां पुरुषोत्तमः ॥ १॥

॥ श्रीभागवततात्पर्यनिर्णयः ॥

आदि
सृष्टिस्थित्यप्ययेहानियतिदृशितमोबंधमोक्षाश्च ।
यस्मादस्य श्रीब्रह्मरुद्रप्रभृति सुरनरव्यद्यीशशक्त्रवात्मकस्य ।
विष्णोर्व्यस्तास्समस्तास्सकलगुणनिधिसर्वदोषव्यपेतः ।
पूर्णनंदोऽव्ययो यो गुरुरपि परमंश्चितयेत्तं महांतम् ॥ १॥

अंत्य
नित्यादोषस्वरूपाय गुणपूर्णायसर्वदा ।
नारायणाय हरये नमः प्रेष्ठतमाय मे ॥ १॥

॥ श्रीभारततात्पर्यनिर्णयः ॥

आदि
नारायणाय परिपूर्णगुणार्णवाय विश्वोदयस्थितिलयोन्नियति प्रदाय ।
ज्ञानप्रदाय विबुधासुर सौख्यदुःख सत्कारणय वितताय नमो नमस्ते ॥ १॥

आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्स एकः ।
संशांतसंविदखिलं जठरे निधाय लक्ष्मीभुजांतरगतस्स्वरोतोऽपिचाग्रे ॥ २॥

अंत्य

तस्मादयं ग्रंथवरोऽखिलोरुधर्मादिमोक्षांतपुमर्थहेतुः ।
किञ्चोदितैस्तस्यगुणैस्तदोन्यैर्नारायणः प्रीतिमुपैत्यतोलम् ॥ १॥

यस्सर्वगुणसम्पूर्णस्सर्वदोषविवर्जितः ।
प्रियतां प्रीत एवालं विष्णुर्मे परमस्सुहृत् ॥ २॥

॥ श्रीयतिप्रणवकल्प ॥

आदि

नत्वा नारायणं वन्दे पूर्णं ब्रह्महरार्चितम् ।
यतेराचरणं वक्ष्ये पूर्णशास्त्रनुसारतः ॥ १॥

समिच्चर्वादिकान्हुत्व सम्यक्पुरुषसूक्ततः ।
सर्वेशामभयं दत्वा विरक्तः प्रव्रजेद्धरिम् ॥ २॥

अंत्य

ध्येयो नारायणो नित्यं सृष्टिस्थित्यंतकारकः ।
भक्तानां मुक्तिदो नित्यामधमाज्ञानिनां तमः ॥ १॥

तदर्थान् ब्रह्मसूत्रेण सम्यङ्ग्निर्णय तत्त्वतः ।
विष्णोस्सर्वोत्तमत्वं हि सर्वदा प्रतिपादय ॥ २॥

॥ श्रीजयंतीनिर्णय ॥

आदि

रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमि भवेत् ।
जयंतीनाम सा प्रोक्ता सर्वपापप्रणाशिनि ॥ १॥

प्रभातकाले मेधावी योगायेती यथाविधि ।
नित्यान्हीकं प्रकुर्वीत भगवंतमनुस्मरन् ।
विश्वायेति च मंत्रेण ततः स्वापं समाचरेत् ॥ २॥

अंत्य

सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
धर्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १॥

॥ श्रीकृष्णस्तुतिः ॥

अंबरगङ्गाचुंबितपादः पदतलविगलितगुरुतरशकटः ।
काळियनागक्ष्वेलन हंता सरसिजनवदल्विकसितनयनः ।
कालघनालिकुर्बुरकायः शरशतशकलित सुररिपुनिवहः ।
संततमस्मान्पातु मुरारिः सततगसमजवखगपतिनिरतः ।
॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णर्पणमस्तु ॥